## दशमोऽध्यायः

### श्रीभगवानुवाच

भूय एव महाबाहो शृणु मे परमं वचः।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥
न मे विदुः सुरगणाः प्रभवं न महर्षयः।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥
यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥
बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥
महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥
एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ३४७, ४५३-
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥ ५४.
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

### अर्जुन उवाच

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१३॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥१४॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥१५॥
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥१७॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥

श्रीभगवानुवाच

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥
अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥
वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥
रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥२४॥
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥
(४२) अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥२७॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥२९॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥
पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥
अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥३३॥
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम्।
कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा॥३४॥
बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥३५॥
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम्।३६॥
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥
यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥३९॥
नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥४१॥

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम
दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः

अर्जुन उवाच

६८, १५४, ४३६ मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥
एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

श्रीभगवानुवाच

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥
पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

संजय उवाच

एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।

अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥१३॥
ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥१४॥

अर्जुन उवाच

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥
अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥१६॥
किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥
त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥१८॥
अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥
अमी हि त्वां सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः॥२१॥
रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥
रूपं महत्ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥२३॥
नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥२४॥
दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥२५॥
अमी च त्वां धृतराष्ट्रस्य पुत्राः
(२०२) २०६. सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥२६॥
वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।

केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥
यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥
यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥
लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥
आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥

श्रीभगवानुवाच

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः । १२४-१२५,
ऋतेऽपि त्वा न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥३२॥ १३२, ४२३.
तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् । १२४-२५, १३१,
मयैवैते निहताः पूर्वमेव २०८, ३१२,
निमित्तमात्रं भव सव्यसाचिन् ॥३३॥ ४२३.
द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् । १२५, २०६.

मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥३४॥
संजय उवाच
एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥३५॥
अर्जुन उवाच
स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥३६॥
कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥३७॥
त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥३८॥
वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥३९॥
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥
सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।

अजानता महिमानं तवेदं
मया प्रमादात्प्रणयेन वापि ॥४१॥
यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥४२॥
पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥४३॥
तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥
अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥४५॥
किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥४६॥

श्रीभगवानुवाच

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥
न वेदयज्ञाध्ययनैर्न दानैर्
न च क्रियाभिर्न तपोभिरुग्रैः ।

एवरूप शक्य अह नृलोके
द्रष्टु त्वदन्येन कुरुप्रवीर ॥४८॥
मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूप घोरमीदृङ्ममेदम् ।
व्यपेतभी प्रीतमना पुनस्त्व
तदेव मे रूपमिद प्रपश्य ॥४९॥

सञ्जय उवाच

इत्यर्जुन वासुदेवस्तथोक्त्वा
स्वक रूप दर्शयामास भूय ।
आश्वासयामास च भीतमेन
भूत्वा पुन सौम्यवपुर्महात्मा ॥५०॥

अर्जुन उवाच

दृष्ट्वेद मानुष रूप तव सौम्य जनार्दन ।
इदानीमस्मि सवृत्त सचेता प्रकृतिं गत ॥५१॥

श्रीभगवानुवाच

सुदुर्दर्शमिद रूप दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्य दर्शनकाङ्क्षिण ॥५२॥
नाह वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवविधो द्रष्टु दृष्टवानसि मा यथा ॥५३॥
भक्त्या त्वनन्यया शक्य अहमेवविधोऽर्जुन ।
ज्ञातु द्रष्टु च तत्त्वेन प्रवेष्टु च परतप ॥५४॥
३४३ मत्कर्मकृन्मत्परमो मद्भक्त सङ्गवर्जित ।
निर्वैर सर्वभूतेषु य स मामेति पाण्डव ॥५५॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्याया योगशास्त्रे
श्रीकृष्णार्जुनसवादे विश्वरूपदर्शनयोगो नाम
एकादशोऽध्याय ॥ ११ ॥

द्वादशोऽध्याय

अर्जुन उवाच

४६४ एव सततयुक्ता ये भक्तास्त्वा पर्युपासते ।
ये चाप्यक्षरमव्यक्त तेषा के योगवित्तमा ॥ १ ॥

श्रीभगवानुवाच

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः । ३२६, ३४३,
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥ ३४६, ३६२,
४१८.

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । ३६२, ४६४–
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥ ६५.
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । ३४७, ४६५.
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । २९८, ३४३,
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥ ३६२, ४६५.
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय । ४६३.
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् । ४६३-६५,
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥ ४७८.
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव । ४६३-६५,४६७,
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥१०॥ ४७८.
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः । ४६३-६५,४६७,
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥ ४७८.
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते । ४६३-४६९.
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२॥
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥१३॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१४॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।

हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६॥
(१०), १२. यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥१७॥
३३८. समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥१८॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येनकेनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥१९॥
ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम
द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः

श्रीभगवानुवाच

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥
तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥
महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।

आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥१०॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥११॥
ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥१२॥
सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१३॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥१५॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥१७॥
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१८॥
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥१९॥
कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥२१॥

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वर ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुष पर ॥२२॥
(२४७) य एव वेत्ति पुरुष प्रकृतिं च गुणै सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥२३॥
(४२), ४५२ ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेण चापरे ॥२४॥
अन्ये त्वेवमजानन्त श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्यु श्रुतिपरायणा ॥२५॥
यावत्सजायते किंचित्सत्त्व स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसयोगात्तद्विद्धि भरतर्षभ ॥२६॥
सम सर्वेषु भूतेषु तिष्ठन्त परमेश्वरम् ।
विनश्यत्स्वविनश्यन्त य पश्यति स पश्यति ॥२७॥
३४३ सम पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मान ततो याति परा गतिम् ॥२८॥
३४६ ४७ प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वश ।
य पश्यति तथात्मानमकर्तार स पश्यति ॥२९॥
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तार ब्रह्म सपद्यते तदा ॥३०॥
अनादित्वान्निर्गुणत्वात्परमात्मायमव्यय ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥३१॥
यथा सर्वगत सौक्ष्म्यादाकाश नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥३२॥
यथा प्रकाशयत्येक कृत्स्न लोकमिम रवि ।
क्षेत्र क्षेत्री तथा कृत्स्न प्रकाशयति भारत ॥३३॥
क्षेत्रक्षेत्रज्ञयोरेवमन्तर ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्ष च ये विदुर्यान्ति ते परम् ॥३४॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्याया योगशास्त्रे
श्रीकृष्णार्जुनसवादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम
त्रयोदशोऽध्याय ॥ १३ ॥

चतुर्दशोऽध्यायः

श्रीभगवानुवाच

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्। ४३६.
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः॥ १॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। ४३६.
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥ २॥
मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत॥ ३॥
सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता॥ ४॥
सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः। ४६१.
निबध्नन्ति महाबाहो देहे देहिनमव्ययम्॥ ५॥
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्। ४६१.
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ॥ ६॥
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्। ७०.
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम्॥ ७॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्। ७०, १५३,
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत॥ ८॥ १५६, १५७.
सत्त्वं सुखे संजयति रजः कर्मणि भारत। ७०, १५७.
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत॥ ९॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा॥१०॥
सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत॥११॥
लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा। ७१-७२, १५५.
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ॥१२॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च। ७१-७२, १५२,
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन॥१३॥ १५७ ५८.
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते॥१४॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥१५॥
कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥
७१-७२, १५७- सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
५८. प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥
७२, १५६, ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
४६१. जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१८॥
४६१. नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥१९॥
४६१. गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥

अर्जुन उवाच

कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥२१॥

श्रीभगवानुवाच

४६२. प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥२२॥
४६२. उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥२३॥
(८६) समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥२४॥
४६२. मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥२६॥
३४३. ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः

श्रीभगवानुवाच

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥
अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥
न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥
ततः पदं तत्परिमार्गितव्यं
यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥
निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५॥
न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥
ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥
उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥१२॥
गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः॥१३॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥
सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥१५॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥१९॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥२०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः

श्रीभगवानुवाच

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥

अहिंसा सत्यमक्रोधस्त्याग शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्व मार्दव ह्रीरचापलम् ॥ २ ॥
तेज क्षमा धृति शौचमद्रोहो नातिमानिता ।
भवन्ति सपद दैवीमभिजातस्य भारत ॥ ३ ॥
दम्भो दर्पोऽतिमानश्च क्रोध पारुष्यमेव च ।
अज्ञान चाभिजातस्य पार्थ सपदमासुरीम् ॥ ४ ॥
दैवी सपद्विमोक्षाय निबन्धायासुरी मता । १३६, (१७६)
मा शुच सपद दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥
द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरश प्रोक्त आसुर पार्थ मे शृणु ॥ ६ ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुरा ।
न शौच नापि चाचारो न सत्य तेषु विद्यते ॥ ७ ॥
असत्यमप्रतिष्ठ ते जगदाहुरनीश्वरम् ।
अपरस्परसभूत किमन्यत्कामहैतुकम् ॥ ८ ॥
एता दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धय ।
प्रभवन्त्युग्रकर्माण क्षयाय जगतोऽहिता ॥ ९ ॥
काममाश्रित्य दुष्पूर दम्भमानमदान्विता । ११०-११.
मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रता ॥१०॥
चिन्तामपरिमेया च प्रलयान्तामुपाश्रिता । २८४
कामोपभोगपरमा एतावदिति निश्चिता ॥११॥
आशापाशशतैर्बद्धा कामक्रोधपरायणा । २८४
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥१२॥
इदमद्य मया लब्धमिम प्राप्स्ये मनोरथम् । २८४
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥
असौ मया हत शत्रुर्हनिष्ये चापरानपि । २८४
ईश्वरोऽहमह भोगी सिद्धोऽह बलवान्सुखी ॥१४॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । २८४.
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिता ॥१५॥
अनेकचित्तविभ्रान्ता मोहजालसमावृता । २४
प्रसक्ता कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१७॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥१८॥
तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥
१४. आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥२०॥
१४. त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥
२८६-८८. एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥२२॥
३५२, ३८४, यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
३८६, ३९०. न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥२३॥
३५ , ४००. तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे दैवासुरसंपद्विभागयोगो नाम
षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः

अर्जुन उवाच

३८३-८९. ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

श्रीभगवानुवाच

३८३. त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥
३८३. सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥
१५८, ३८३. यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः।

प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः । ३५२, ३९०.
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्शयन्तः शरीरस्थं भूतग्राममचेतसः । (३५८).
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥
आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः । ३९१.
रस्याः स्निग्धाः स्थिरा हृद्या
आहाराः सात्त्विकप्रियाः ॥ ८ ॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । ३९१.
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥
यातयामं गतरसं पूति पर्युषितं च यत् । १५८, ३९१.
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥
अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । ३५२.
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥११॥
अभिसंधाय तु फलं दम्भार्थमपि चैव यत् । ३७१.
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥१२॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । १५८, ३९१.
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१३॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥१५॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६॥
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः । ३७१
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥१७॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत् । ३७१.
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥१८॥

१५८. मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥१९॥
८७, २६१ ७१. दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥२०॥
१५८, (३७१). यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते चपरिक्लिष्टं तद्दानं राजसं स्मृतम् ॥२१॥
३७१. अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥२२॥
ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥२३॥
४४८. तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥२४॥
१२, ३६४, तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
४४८. दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥२५॥
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥२६॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥२७॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥२८॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम
सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः

अर्जुन उवाच

४४८. संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥

श्रीभगवानुवाच

२५४, (२५६,) काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।

सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥ ४४३-४५,४६७.
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः । ४४७.
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । ४४७-४८,
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । ४४७-४८,
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥ ४४९.
नियतस्य तु संन्यासः कर्मणो नोपपद्यते । १०२, ३५२,
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥ ४४०, ४४४,
४४८, ४७३, ४७७,४८०.
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् । १४४-४५,
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥ १५३.
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन । १६७, २५५,
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥ ४४८, ४४९.
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥१०॥
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः । (२६१, २७६),
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥११॥ ४७३-७५.
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । ३६४.
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१२॥
पञ्चैतानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥१३॥
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥१४॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥१५॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१६॥

१७६, ४००, यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।
४२१ २६ हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥१७॥
ज्ञान ज्ञेय परिज्ञाता त्रिविधा कर्मचोदना ।
करण कर्म कर्तेति त्रिविध कर्मसग्रह ॥१८॥
(४२) ज्ञान कर्म च कर्ता च त्रिधैव गुणभेदत ।
प्रोच्यते गुणसख्याने यथावच्छृणु तान्यपि ॥१९॥
३०१, ३९१ सर्वभूतेषु येनैक भावमव्ययमीक्षते ।
अविभक्त विभक्तेषु तज्ज्ञान विद्धि सात्त्विकम् ॥२०॥
३९१. पृथक्त्वेन तु यज्ज्ञान नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञान विद्धि राजसम् ॥२१॥
१५८, ३९१ यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्प च तत्तामसमुदाहृतम् ॥२२॥
३५२, ३७२, नियत सङ्गरहितमरागद्वेषत कृतम् ।
३७३ अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥२३॥
३७२ यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुन ।
क्रियते बहुलायास तद्राजसमुदाहृतम् ॥२४॥
१५१, १५७, अनुबन्ध क्षय हिंसामनपेक्ष्य च पौरुषम् ।
१५८, ३७२, मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥२५॥
३७४ ७५

मुक्तसङ्गोऽनहवादी धृत्युत्साहसमन्वित ।
सिद्ध्यसिद्ध्योर्निर्विकार कर्ता सात्त्विक उच्यते॥२६॥
(७३) रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचि ।
हर्षशोकान्वित कर्ता राजस परिकीर्तित ॥२७॥
७३, १५८. अयुक्त प्राकृत स्तब्ध शठो नैष्कृतिकोऽलस ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥२८॥
बुद्धेर्भेद धृतेश्चैव गुणतस्त्रिविध शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनजय ॥२९॥
३५१, ३७५, प्रवृत्ति च निवृत्ति च कार्याकार्ये भयाभये ।
३७६ ३९१ ९४ बन्ध मोक्ष च या वेत्ति बुद्धि सा पार्थ सात्त्विकी॥३०॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च । ३५१, ३७५,
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥३१॥ ३९३-९४.
अधर्मं धर्ममिति या मन्यते तमसावृता । १२२, ३५१,
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥३२॥ ३७५, ३९३-९४.
धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥३३॥
यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन । (१५५), ३७१.
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥३४॥
यया स्वप्नं भयं शोकं विषादं मदमेव च । ७३.
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥३५॥
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥३६॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥३७॥
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥३८॥
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥४०॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप । ३७८.
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥४१॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ३७८.
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥४२॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । ३७८.
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥४३॥
कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् । ३७८.
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः । ३८०, ४७८.

स्वकर्मनिरत सिद्धिं यथा विन्दति तच्छृणु ॥४५॥
३८०. यत प्रवृत्तिर्भूताना येन सर्वमिद ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव ॥४६॥
१३३ श्रेयान्स्वधर्मो विगुण परधर्मात्स्वनुष्ठितात् ।
स्वभावनियत कर्म कुर्वन्नाप्नोति किल्बिषम् ॥४७॥
१३२. सहज कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृता ॥४८॥
असक्तबुद्धि सर्वत्र जितात्मा विगतस्पृह ।
नैष्कर्म्यसिद्धिं परमा सन्यासेनाधिगच्छति ॥४९॥
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥५०॥
बुद्ध्या विशुद्धया युक्तो धृत्यात्मान नियम्य च ।
शब्दादीन्विषयास्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥५१॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानस ।
ध्यानयोगपरो नित्य वैराग्य समुपाश्रित ॥५२॥
अहकार बल दर्प काम क्रोध परिग्रहम् ।
विमुच्य निर्मम शान्तो ब्रह्मभूयाय कल्पते ॥५३॥
(८६) ब्रह्मभूत प्रसन्नात्मा न शोचति न काङ्क्षति ।
सम सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥५४॥
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वत ।
ततो मा तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥५५॥
४७० ७१ सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रय ।
मत्प्रसादादवाप्नोति शाश्वत पदमव्ययम् ॥५६॥
३४७, ४०४ चेतसा सर्वकर्माणि मयि सन्यस्य मत्पर ।
बुद्धियोगमुपाश्रित्य मच्चित्त सतत भव ॥५७॥
मच्चित्त सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥५८॥
६२. यदहकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वा नियोक्ष्यति ॥५९॥

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा । ६२.
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥६०॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । ३४७.
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥६१॥
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥६२॥
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया । ३५६, ३४३,
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥ ३६०, ३९१.
सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥६४॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । ३४३.
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । १३६, १७२,
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६६॥ ४५५.
इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥६७॥
य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥६८॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥७०॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तःशुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा । ६८, १५४,
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥७२॥ (२४६)

अर्जुन उवाच

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत । ६८, १५४,
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥७३॥ (२४६), ४११

संजय उवाच

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥
व्यासप्रसादाच्छ्रुतवानेतद्‌गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥७५॥
राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥७७॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नाम
अष्टादशोऽध्यायः ॥ १८ ॥



॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥

॥ शान्तिः पुष्टिस्तुष्टिश्चास्तु ॥

## श्लोकांच्या उल्लेखसूचींतील दुरुस्त्या

| पृष्ठ | अध्याय | श्लोक | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| २२ | ६ | ३२ | २७६ | २७६ |
| २४ | ७ | ३ | ३११ | ११ |
| ३० | ९ | २७ | ३४८ | ३४७ |
| ४५ | १४ | १४ | | ४६१ |
| ५० | १६ | २४ | ३५ | ३५२ |
| ५४ | १८ | २७ | (७३) | (७३) |
| ५५ | १८ | ३५ | ७३ | ७३ |



या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना
या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा



# गीतातत्त्वदर्शन
अथवा
# भारतीय नीतिशास्त्र

॥ श्रीसरस्वत्यै नमः ॥

# गीतातत्त्वदर्शन

## प्रास्ताविक

## प्रकरण पहिलें

## उपोद्घात



### श्रीमद्भगवद्गीतेची थोरवी

या आपल्या परमपवित्र भारतवर्षांत कुरुक्षेत्राच्या पुण्यभूमीवर साकाररूपधारी प्रत्यक्ष भगवंतानीं स्वतःचा प्रियतम सखा व भक्त धनंजय अर्जुन ह्यास उपदेशिलेल्या, व महाकवि श्री व्यासांनीं आपल्या प्रासादिक वाणीनें महाभारतांत पद्यरूपानें अधिष्ठित केलेल्या, श्रीमद्भगवद्गीतेची थोरवी भारतीयच नव्हे तर अखिल जागतिक वाङ्मयात केवळ अपूर्व आहे. लहानसहान टेकड्या जवळून पाहिल्या तर नीट दिसतात, अंतरावरून त्या दिसेनाशा होतात. परंतु विशाल डोंगर दुरून पाहिला, म्हणजे त्याचे सर्वांगीण स्वरूप आकलन करणें अधिक सुलभ होऊन त्याच्या स्वरूपाच्या सौंदर्यांत व भव्यतेंत भरच पडते. परंतु जितका अधिक विशाल तितकाच पाहणाऱ्याच्या अंतरानें आकलनावर होणारा विपरीत परिणाम कमी. प्रमाणांचेंहि असेंच आहे. ऋग्वेद

चमकणारीं पण कालाचें थोडेसेंहि अंतर पडताच दृष्टीला दिसेनाशीं होणारीं पुस्तकें शेंकड्यावारी प्रत्यहीं बाहेर पडत असतात; पण कालाच्या सर्वभक्षक प्रचंड प्रवाहालाहि आत्मविश्वासानें टक्कर देऊन, व त्या संघर्षांतून अधिक तेजानेंच बाहेर पडून, विश्वाला मार्गदर्शन करीत राहणारे गीतेसारखे ज्ञान-हिमाचल विरळाच! पार्थिव हिमाचलाच्या हृदयाला शेवटीं कांहीं स्थलमर्यादा ही आहेच. गीतेसारख्या ज्ञानमुकुटमणींना कालाची तितकीहि मर्यादा नाहीं; स्थलाची तर नाहींच नाहीं!

अर्थात् हजारों वर्षें ज्या ग्रंथसम्राज्ञीनें आपलें तेजस्वी यश टिकविलें, व प्राचीनापासून अर्वाचीनापावेतों अमित भाष्यकाराकडून मान्यता मिळवून मानाचे मुजरे स्वीकारले, तिच्यातील तत्त्वविवेचनाचें स्वरूपहि तसेंच लोक विलक्षण असलें पाहिजे हें उघडच आहे. येऱ्हवीं 'पिंडे पिंडे मतिर्भिन्ना' अशा प्रकारच्या या बहुरंगी संसारात अनेक भिन्नमतवाद्यांनीं एकाच गीतेला मान झुकविण्यांत धन्यता मानावी, आपापल्या सांप्रदायिक मतप्रणालींना गीता-माउलीच्या वचनाचा आशीर्वाद मिळविण्यासाठीं अहमहमिकेनें धडपड करावी, असें दृश्य दिसलें नसतें. भारतीय तत्त्वज्ञानाच्या क्षेत्रात भिन्न टोकामत गेलेल्या दर्शनपद्धतींनींहि—किंबहुना कित्येक भारतबाह्य विचारवंतांनींहि—गीतेबद्दल आदर व्यक्त करण्यांत अपवादात्मक एकवाक्यता दर्शविली आहे! गीतेच्या थोरवीचें हें एक मोठेंच प्रमाण होय. आर्यावर्तांत पार प्राचीन काळापासूनच गीता ग्रंथाला प्रस्थानत्रयींत उपनिषदांच्या बरोबरीनें सन्मानाचें स्थान दिलें जाऊन गीतेची अपूर्वता निर्विवाद मान्य करण्यात आली आहे.

### गीतार्थाची झालेली ओढाताण

मात्र यामुळेंच गीतेवर एक आपत्तीहि ओढवली. "जगाच्या कल्याणा संतांच्या विभूति। देह कष्टवीती उपकारें" या संतश्रेष्ठ तुकाराममहाराजांच्या यथार्थ उद्गाराप्रमाणें, ज्या गीतेचें अक्षरन् अक्षर त्रिविधतप्त संसारत्रस्त व संशयग्रस्त व्यक्तींच्या अंतःकरणाला—यत्किंचित् पामरापासून विश्ववंद्य महात्म्या पावेतोंच्या, 'सुदुराचारी' पाप्यापासून योगिराज पुण्यश्लोकापावेतोंच्या हृदयांना—सात्त्विक समाधानाचा ओलावा प्राप्त करून देण्यासाठीं आज शतकानुशतकें झिजत आहे, त्या गीतेच्या अर्थदेहाची या अतुल मानवसेवेंत ओढाताण व्हावी हें शाहजिकच आहे. भिन्नमतवाद्यांना आपल्या कृपाछत्राखालीं सारख्याच

प्रेमानें आसरा देणाऱ्या या वाङ्मयसंतमाउलीचें अर्थस्वरूप या खटाटोपांत चांगलेंच कष्टविलें गेलें. कोठेंकोठें तर कमीअधिक प्रमाणात तें विद्रूपहि झालें! रणांगणात किंवा लोकसेवेंत प्राप्त झालेल्या व्रणांनीं विद्रूप होणारें एखाद्या राणा संगासारख्या शूर धर्मयोद्ध्याचें किंवा कर्मवीर देशभक्ताचें शरीर तशाहि अवस्थेंत निष्क्रिय ग्याड व्यक्तीच्या सुदर शरीरापेक्षा अधिक शोभतें, तद्वत् गीतेच्या अर्थाच्या या ओढाताणीनें तिच्या वास्तविक महत्वेला फाडीमात्रहि बाधा पोचली नाहीं हा भाग वेगळा. परंतु गीतेचा ईश्वरी कौल आपल्याच मताला अनुकूल आहे हें सिद्ध करण्यासाठीं तिच्या सरळ शब्दार्थांची खेचाताण करून उगीचच आडरानांत शिरून स्वानुकूल नवनवीन अर्थांचा आरोप तिच्यावर केला गेला; तिचें स्वरूप स्वतःच्या एकांगी 'नान्यदस्तिवादी' विचारसरणीच्या रंगरूपाशीं जुळतें आहे हें दर्शविण्यासाठीं कित्येकांनीं भाष्याच्या व स्पष्टीकरणाच्या नांवावर तिजवर नकली रंगाचीं लिंपणें चढविलीं; श्लोकांचे अर्थ करतांना पदरचे विसंगत शब्द जोडले; व महत्वाच्या स्पष्ट उद्गाराना, ते स्वमतविरोधी भासले, म्हणून गौणत्व देऊन अर्थवादाच्या अंधारकोठडींत कोंबलें! सारांश, आपापल्या विशिष्ट विवेचनास गीताईच्या संमतीचा आभास उत्पन्न करण्यासाठीं नानातऱ्हेचे प्रयत्न करण्यांत आले. मात्र हें झालें तें गीते-विषयीं पूर्ण आदरबुद्धि ठेवूनच झालें. परंतु भक्ताच्या या प्रेमसेवेच्या ओझ्या-खालीं गीतेचें मूळस्वरूप व संदेश दृष्टिआड होण्याच्या मार्गास लागले. उप-ऱ्यानीं जनहृदयमंदिरें व्यापलीं व खरे हक्कदार देशोधडीला लागले! भक्तानें देवतामूर्तीस सुगंधित चंदनाचा तरल लेप चढविला तर ती सेवा देवतेसहि रुचेल; पण मारुतीच्या मूर्तीवर शेंदुराचे लेपचे लेप चढवीत गेल्यानें काला-तरानें मूळ सुंदर मूर्ती दृष्टिआड होऊन वेगळीच एक ओबडधोबड आकृति तेथें जनतेस दिसत राहावी, व भक्तार्पित पुष्पधूपदीपनैवेद्यादिकांचा स्वीकार त्या शेंदुराच्या लेपानेंच करून मूळ मूर्तीपावेतों त्याचा वासहि पोहोचू नये, त्याप्रमाणें कित्येक भाष्यकारांनीं चढविलेल्या टीकेच्या पुटानीं मूळ गीतार्थाची अवस्था झाली आहे असें मोठ्या उद्वेगानें म्हणावें लागतें! सुदैव इतकेंच कीं, मारुतीच्या बाबतींत तो शेंदुराचा लेप वाढत वाढत शेवटीं आपल्याच भारभूततेनें दुभंगून माथ्यावरून खालीं पडेपावेतों भक्तास मूर्तीचें तें शुद्ध-स्वरूप दिसतच नाहीं, तसें येथें नाहीं. भाष्यकारानें गीतेवर आणल्या मती-

नाथीची कितीहि पुढें चढविलीं तरी त्याबरोबरच गीतेचे मूळ श्लोकहि वाचकास उपलब्ध असल्यानें चिकित्सक अभ्यासकाला तें भाष्यपुट दूर सारून गीतेच्या मूळ रूपाचा स्वतंत्र विचार करणें शक्य असतें !

### निश्चित तात्पर्याची आवश्यकता

वस्तुत: अत्यंत तर्कशुद्ध, सुसंगत, व संशयनिरसनासाठींच उघडपणें निर्माण झालेल्या या ग्रंथसम्राज्ञीचें स्वरूप भाष्यकाराच्या बहुरंगी चष्म्यातून पाहतां संशयनिर्माणकारी भासूं लागतें. "तदेकं वद निश्चित्य" (श्लोक ३-२) या काकुळतीच्या प्रार्थनेला मान देऊन साक्षात् वागीश्वर श्रीकृष्णानें दिलेल्या या पवित्र प्रदीर्घ उत्तरातून भिन्न भिन्न विचारवंतांनीं वेगवेगळे अर्थ काढले आहेत ! जणू एकाच बासरीतून अनेकांनीं भिन्न भिन्न सूर काढावे ! परंतु बासरीनें विश्वाला मोहिनी घालणारा, व गीतेनें त्याच विश्वाची मोहिनी दूर करणारा, श्रीकृष्ण एकच असला तरी गीता म्हणजे कांहीं बासरी नव्हे ! तसें पाहिलें तर, ज्या बासरींतून जगज्जनक श्रीकृष्णानें मधुर सूर काढले तिच्या तूनच मानव पामरांनीं वेगळे वेडेवाकडे सूर काढण्याच्या प्रयत्नांत त्या बासरीच्या पावित्र्याचा अपमानच होईल, पण असें करणें इष्ट नसलें तरी एक वेळ शक्य आहे. परंतु गीतेच्या संबंधांत असा प्रकार अनिष्टच नव्हे तर खरोखर अशक्य देखील आहे. बासरींत स्वतःचें म्हणणें कांहीं नसून तिच्यांत अर्थहीन अशी केवळ एक पोकळी असल्यानें तिच्यातून अनेकांनीं अनेक सूर काढणें संभवनीय आहे परंतु—

> यदा यदा हि धर्मस्य ग्लानिर्भवति भारत
> अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥४-७॥
>
> परित्राणाय साधूनां विनाशाय च दुष्कृताम्
> धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥४-८॥

[ अर्जुना, ज्या ज्या वेळीं धर्माला निस्तेजता येऊन अधर्माला जोर चढतो त्यावेळीं मी स्वतःच जन्म घेतों. सज्जनरक्षणार्थ, दुर्जनविनाशार्थ, व धर्म संस्थापनार्थ मी युगायुगांत अवतार घेत असतो. ] या स्पष्ट प्रतिज्ञेस अनुसरून प्रत्यक्ष परमेश्वरानें अवतार घेऊन विशिष्ट दृष्टिकोनानें सांगितलेल्या गीतेच्या बाबतींत अर्थभेदाचें आभास उत्पन्न केलें जाणें हें एकंदर समाजहिताच्या

दृष्टीनें अनिष्ट आहे इतकेंच नव्हे तर सत्याच्या दृष्टीनं शक्यहि नव्हे! कोणी भाष्यकार गीतेंतून निर्मळ कर्मसंन्यासाचें तात्पर्य काढूं पाहतो, अन्य कोणी गीतेंत संन्यासमार्गाची निंदा व निष्कामकर्मयोगाची निरपवाद संस्थापना पाहतो; तिसऱ्या कोणास त्याच गीतेंत भक्तिमार्गाचें तर चवथ्यास पातंजल योगाचें दर्शन घडतें, याशिवाय आणखी कोणी गीतेच्या द्वारें श्रीकृष्णानें अनिर्बंध अहिंसा तत्त्वाचें समर्थन केलें आहे असेंहि प्रतिपादन करीत असतात; आणि शेवटीं, भ्याड खुनादि कृत्यांच्या व निंद्य हिंसेच्या पुरस्कारार्थ याच गीतेचे पान उघडून वाचावयास देणारे कोणी कोणी तयार आहेतच![1] हे असे परस्परविरोधी अर्थ पाहिले म्हणजे गीताकार विभूतीच्या अतीव बुद्धि-कौशल्याबद्दल कितीहि विस्मयादर वाटला, तरी तिच्या मूळ निःसंदेह एकात्मक उद्देशाविषयीं उत्कंठा मात्र कमी होण्याऐवजीं अधिक तीव्रच होते!

## प्रस्तुत विवेचनाचा दृष्टिकोन

अशाच उत्कंठेतून निर्माण झालेला, गीतेचा सुसंगत एक निश्चितार्थ काढण्याचा एक नम्र प्रयत्न या ग्रंथात आम्ही वाचकांसमोर ठेवीत आहों. मुग्ध वाचकांना यात कितपत वैशिष्ट्य दिसतें, पटतें, हें ते सारासारविवेकपूर्वक ठरवितीलच. मात्र हें वैशिष्ट्य येथें सुप्रसिद्ध पूर्वसूरींचें योग्य ऋण नाकारण्याचा आमचा उद्देश नाहीं. अनेक ठिकाणीं या अर्थी 'भाष्यकारांचें वाट पुसतच' आम्हीं आमचा मार्ग निश्चित करण्याचा प्रयत्न केला आहे. आणि विवेचनाच्या ओघात जेथें कोणा भाष्यकाराशीं आमचा मतभेद प्रदर्शित करण्याचा प्रसंग आला, त्यावेळीं तो विरोध निष्कारण फुगलेला दिसू नये—जितक्या अंशापुरता तो वस्तुतः असेल तितक्यापुरताच तो दर्शविला जावा व त्या भाष्यकाराचें सारेंच विवेचन अग्राह्य आहे असा वाचकाचा ग्रह होऊ नये—अशी काळजी घेतली आहे. यासाठीं एका स्थळीं ज्या भाष्यकारावर टीका केलेली असेल त्याचाच इतरत्र अनुमतिदर्शक उल्लेख आढळू शकेल. मात्र त्याच-बरोबर जेथें आम्हीं असा मर्यादित मतभेद व्यक्त केला असेल तेथें वाचकांनीहि केवळ आदरभावनेच्या दृष्टीनें न पाहता, तत्त्वान्वेषी बुद्धिनिष्ठ विचारपद्धतीचाच अवलंब करावा अशी आमचीहि उत्कट अपेक्षा आहे. टीकाविषयक मत

1 हे सारे गीतेच्या भक्तांच प्रकार झाले, याशिवाय तिचे निंदक निरनिराळ्या ठायीं नाना अर्थ-किंवा अनर्थ-पहात असतातच!

प्रदर्शित करणारी व्यक्ति स्वत:च्या जीवनचारित्र्याच्या कसोटीनें कितीहि श्रेष्ठ असली तरी तिचा गीतार्थविषयक दृष्टिकोन कितपत् यथार्थ किंवा अयथार्थ आहे हाच प्रस्तुत प्रश्न मानला पाहिजे. गीतेसारख्या तर्कनिष्ठ व कार्यकारण विवेचनावर भर देणाऱ्या ग्रंथाचें मनन करताना बुद्धिविरोधी भावनेवर विसंबणे हा त्या ग्रंथाचा अपमानच होय. भारतवर्षात वेदाविषयीं असलेला पूज्यभाव पूर्णपणें अवगत असूनहि, योग्य वेळ येताच त्यानाहि गौणत्व देऊन–

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ॥२-४५॥

[वेद हे सत्त्वरजतमात्मक आहेत, अर्जुना, तू त्याच्याहि पलीकडे जाऊन त्रिगुणातीत हो.] असा स्पष्ट आदेश देणारे गीताकार स्वत: तत्त्वविवेचनाच्या प्रांतात कसे बुद्धिप्रामाण्यवादी होते हें दिसून येतें म्हणून त्यानींच विश्वोद्धारार्थ निर्मिलेल्या या गीतारूपी कामधेनूचें दोहन करून तिचें शुद्ध भावार्थदुग्ध ग्रहण व प्रकाशित करण्याचा अधिकार जसा ससारमान्य श्रेष्ठ व्यक्तींना पोचतो तसा तो सामान्यचरित्र व्यक्तीलाहि पोचतो, या विचारावर विसंबूनच आम्ही गीतातत्त्वदर्शनाचा हा अल्प प्रयत्न वाचकासमोर ठेवीत आहोत. या प्रयत्नात कोणत्याहि पूर्वसंप्रदायाच्या अनुयायित्वाचें आमच्यावर बंधन नाहीं गीतेकडून काहीं वदविण्याचा प्रयत्न करण्याएवजीं गीतेला स्वत:लाच काय हवें तें वदू द्यावें व आपण केवळ वाचकासमोर परिचयकाराची भूमिका धारण करावी अशी आमची इच्छा आहे. एखाद्या विशिष्ट रंगाची भिंगे लावलेला चष्मा या कार्यासाठीं न वापरता, जें आहे तेच अधिक स्पष्टपणें परिचित करून देणाऱ्या साध्या बिनरंगी भिंगातून आम्ही वाचकाना गीतार्थाचें दर्शन करवू चाहतो.

जाताजाता एका गोष्टीकडे वाचकाचें लक्ष येथें वेधणे इष्ट होइल. गीतेंत केवळ नीति-अनीति, कर्तव्य-अकर्तव्य, अशा प्रश्नाचीच चर्चा नसून जगदुत्पत्ति, क्षेत्रक्षेत्रज्ञविचार, इत्यादि स्वरूपाची चर्चाहि आलेली आहे. पाश्चिमात्य तत्त्वज्ञानात या चर्चाचें क्षेत्र नीतिशास्त्र (Ethics) व अध्यात्मविद्या (Metaphysics) या भिन्न नावाखालीं वेगवेगळें ठेवण्यात येतें, व एका दृष्टीनें त्यात लाभहि आहे. परंतु आर्य तत्त्वज्ञानाच्या एकंदर परंपरेस अनुसरून गीताकारानीं अर्जुनाच्या मूलत: धर्माधर्मविषयक प्रश्नाला द्यावयाच्या उत्तराम सर्वांगपूर्णता आणण्यासाठीं अध्यात्मज्ञानाचाहि कुशलतेनें काहीसा ऊहापोह केलेला

आहे. पण असें असलें तरी, गीतेंतील प्रमुख प्रतिपाद्य सिद्धांत नीतिशास्त्रविषयक आहे हें विसरून चालणार नाहीं. एका विशिष्ट विलक्षण प्रसंगीं काय करणें चांगलें होईल व काय वाईट होईल या अर्जुनाच्या प्रश्नातून गीतेंचा चालना मिळालेली आहे. आम्ही या पुस्तकात श्रीमद्भगवद्गीतेची मुख्यतः नीतिशास्त्राच्या दृष्टीनें चर्चा करणार असून गीतेंतील तदितर विवेचनाला स्वतंत्र महत्त्व देण्याचा आमचा विचार नाहीं.

## प्रकरण दुसरें

# सारनिर्णयाचीं साधनें

कोणत्याहि विवेचनाचें तात्पर्य निश्चित करण्याची एक सप्तविध कसोटी प्राचीन काळापासून भारतवर्षांत मान्यता पावलेली आहे. मीमांसकाच्या शब्दांत तिचें वर्णन असें आहे—

उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम्
अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये ॥

यांत सारनिर्णयार्थ ग्रंथांतील उपक्रम, उपसंहार, अभ्यास, अपूर्वता, फल, अर्थवाद आणि उपपत्ति या सात गोष्टींचा विचार करावयास सांगितलें आहे.

**उपक्रम व त्याचें महत्व . विचार आणि भाषा**

यापैकीं पहिला जो उपक्रम, त्याचा अर्थ प्रारंभकाळची एकंदर परिस्थिति असा आहे. चर्चाविषयक ग्रंथाचा प्रारंभ कोणत्या पृष्ठ व पार्श्वभूमींत झाला आहे हें पाहिलें म्हणजे ग्रंथकाराचा खरा आशय लक्षांत येण्यास सहजच साह्य होतें. वाक्याला जसा संदर्भ तसा ग्रंथाला उपक्रम. एखाद्या वाक्याच्या स्पष्टीकरणार्थ जसें त्याच्या संदर्भाकडे तसें ग्रंथाच्या स्पष्टीकरणार्थ उपक्रमाकडे नीट लक्ष देणें इष्ट असतें. गीतेंतील तत्त्वज्ञान अर्जुनाच्या प्रश्नाला उत्तर म्हणून सांगितलेलें आहे. यासाठीं तें योग्य प्रकारें समजून घ्यावयाचें असेल तर अर्जुनाच्या त्या प्रारंभीच्या शंकेचा व मानसिक आंदोलनाचा खरा आशय लक्षांत घेणें आवश्यक आहे. त्याबाबतींतच जर गैरसमज झाला तर श्रीकृष्णप्रणीत विचारसरणीचा सारा ग्रंथच चूक लागेल यांत नवल काय ?

ग्रंथाचा अर्थ लावण्यासाठीं उपक्रमाकडे पाहण्याची अशी आवश्यकता कां पडावी ? वनराज सिंहानें भक्ष्यावर झेप घालण्यापूर्वी थोडें मागें सरावें, त्याप्रमाणें एखाद्या वचनांतलें सत्य हस्तगत करावयाचें असतां, केवळ त्या

वचनावरच लक्ष केंद्रित न करिता प्रथम थोडें मागें–पार्श्वभूमीकडे, संदर्भाकडे, –नीट पाहणें आवश्यक कां मानलें जावें ? याचें एक कारण असें आहे. एखादें सत्य प्रथम विचारस्वरूपात कोणाच्या मनात उद्भूत झाल्यावर, तें जर इतर कोणास सांगावयाचें असेल तर तें भाषेच्या द्वारें व्यक्त केलें पाहिजे[१]. एकाच्या मनात विचाररूपानें असलेलें ज्ञान इतरास समजून घ्यावयाचें असेल तर भाषेचें माध्यम हा त्याचा मार्ग होय. ज्याप्रमाणें निराकार चैतन्य विशिष्ट साकार देहात बद्दिस्त होऊन जगात प्रकटतें व इतस्ततः भटकतें, त्याप्रमाणें वैचारिक सत्यहि विशिष्ट भाषादेहात अवतीर्ण होऊन प्रकट होतें व एका मनातून दुसऱ्यात प्रवेश करू शकतें.[२] पण भाषचा हा देह प्राप्त झाल्यानें त्या सत्याला जसा काही लाभ होतो तसाच थोडा हानीचाहि वाटा उचलावा लागतो. भाषेच्या योगानें विचाराला स्थैर्य व विनिमयपात्रता प्राप्त होत असली, तरी भाषेला असणाऱ्या स्थलकालादींच्या मर्यादाहि सत्याला सहन कराव्या लागतात. भाषा अनेक वेळा द्व्यर्थी किंवा बह्वर्थी असू शकते. वाणीचे मूळ वर्ण जरी त्रिकालाबाधित व उपाधिनिरपेक्ष असले तरी मानवप्राणी त्याचे जे शब्दवाक्यादि समूह तयार करतो त्यात मानवी अपूर्णता साहजिकच शिरते यामुळें किती तरी शब्द भाषेत एकाहून अधिक अर्थांनीं उपयोजिले जातात. लक्ष म्हणजे एक गणनसंख्या किंवा मनाचें अवधान असे दोन अर्थ शक्य आहेत, तसेंच कोटी म्हणजे लक्षशतसंख्या किंवा अर्थचमत्कृति, जोडा म्हणजे पादत्राण किंवा देहिजण, विशेषतः पतिपत्नी. ‘ लक्षाशिवाय कोटी शक्य नाहीं ’, ‘ जोड्यानें जेवावयास बसू नये ’, ‘ रामरावचा जोडा चांगला शोभतो ’, इत्यादि वाक्यांचे यामुळेंच दोन अर्थ होऊन कधींकधीं मौज उत्पन्न होते. भारतीय युद्धात ‘ अश्वत्थामा ’ नावातील संदिग्धतेमुळें घडून

१ येथें ‘ भाषा ’ शब्दात वर्णाक्षरांशिवाय हावभावहि समाविष्ट आहेत असें समजावें

२ मात्र, विचार जेव्हा एका मनातून दुसऱ्या मनात जातो तेव्हाच भाषेत व्यक्त होतो, व आत्मचिंतनात भाषा वापरलीच जात नाहीं असें नव्हे फरक इतकाच कीं, आत्मविचार भाषेशिवायहि शक्य आहे, विचारविनिमय तसा शक्य नाहीं याचा अधिक चर्चा येथें अप्रस्तुत होईल विशेषत गीतेचें स्वरूप आत्मचिंतनात्मक नसून विचारविनिमयात्मक–संभाषणात्मक–आहे हें वाचक ध्यानात घेतालच

आलेला द्रोणवधाचा प्रसंग प्रसिद्धच आहे. 'यथार्थदीपिके'त वामनपंडित एके स्थळीं म्हणतात : " 'सैंधव' शब्दें लवण। आणि 'सैंधव' सिंधुदेश अश्वाचीहि खूण। परी युद्धप्रसंगीं न देती लवण। आणि न दाविती घोडा जेविता॥" (श्लोक १२–१२). शिवाय, विशिष्ट शब्दच अनेकार्थी असतात असें नसून, कित्येक वेळा नुसत्या वाक्यरचनेच्या संदिग्धतेमुळेंहि श्लेष निर्माण होतो उदाहरणार्थ, 'रामाला गोविंदाला चार रुपये देणें आहे' असें म्हट ल्यास, संदर्भ माहित नसेल तर, रामादि सावकार असू शकतो किंवा गोविंदादि असू शकतो मुद्दा असा कीं, भाषेचें आवरण स्वीकारल्यावर तिच्या या दोषाची बाधा वैचारिक सत्यालाहि भोगावी लागते. या अनेकार्थित्वावर पूर्वापार संबंध–म्हणजे उपक्रम–हा एक उत्तम उपाय असल्यानें कोणत्याहि विवेचनातील सत्य हुडकून काढताना उपक्रमाकडे लक्ष द्यावें लागतें. तसें न केल्यास ग्रंथकाराच्या मनात एक विचार असून वाचक त्याच्यावर वेगळ्याच विचाराचा आरोप करण्याचा संभव राहतो. गीतेंतील 'कर्म' या महत्त्वाच्या शब्दावर गुरु व्याख्यान देत असता, शिष्य जर ती चर्चा व्याकरणातील 'कर्म' या अर्थानें ग्रहण करू लागला, तर ते ध्यानात आल्यावर "तुझ्यासारख्याला गीता काय शिकवू, माझें 'कर्म'!" असे उद्वेगानें उद्गार काढून गुरूनें आपल्या 'कर्मा'वर हात मारून घेतला तर यात दोष कोणाचा?

### विचारांची परिस्थितिसापेक्षता

व्यक्त विचाराला भाषेमुळें प्राप्त होणाऱ्या या संदिग्धतेच्या धोक्याशिवाय, उपक्रमाकडे लक्ष देण्याच्या आवश्यकतेचें आणखीहि एक कारण सांगता येईल कोणत्याहि विचाराचा भाषारूपी देहच नव्हे तर त्याचा रहस्यरूपी गाभा देखील कांहीं अंशीं पार्श्वभूमीवर अवलंबून असतो. ज्या परिस्थितींतून तो विचार उद्भवतो तिच्या विशिष्ट स्वरूपावरून त्याची दिशाहि कांहीं अंशीं निर्धारित होत असते. या विश्वातील प्रत्येक घटना थोड्याफार अंशानें परिस्थितिसापेक्ष असते. 'यदा यदा हि धर्मस्य ग्लानिर्भवति' (४–७) इत्यादि प्रत्यक्ष भगवदुक्तीवरूनच स्वतः त्यांचा अवतारहि विशिष्ट परिस्थितीला अनुलक्षून होत असतो हें दिसून येतें. यासाठीं त्यांच्या एखाद्या अवताराचेंहि रहस्य समजून घ्यावयाचें असेल तर त्याच्या आरंभकालीन परिस्थितीचा विचार आवश्यक ठरतो. विश्वातील सर्वच घटनांना लागू पडणाऱ्या या

